**अतनुशराग्रविद्धवपुषेत्य विदर्भभुवं**
**सुखमनुभूयतेऽद्य हरिणाग्रसरेण चिरम् ।**
**इति स निशम्य केलिवनपालिवधूवचना-**
**न्यभजदमन्दमन्तरचिरेण हरिः प्रमदम् ॥ ७३ ॥**

इति श्रीदन्तिद्योतिदिवाप्रदीपांङ्कसत्यमङ्गलरत्नखेटश्रीनिवासदीक्षिततनयस्य
कामाक्षीगर्भसंभवस्य श्रीमदर्धनारीश्वरदीक्षितगुरुचरण-
सहजतालब्धविद्यावैशद्यस्य श्रीराजचूडामणि-
दीक्षितस्य कृतिषु रुक्मिणीकल्याण-
नाम्नि काव्ये द्वितीयः सर्गः ॥

**अतन्विति**—सः यः पूर्वोक्तविधया विरहपर्याकुलतया दुरन्तचिन्ता-सन्तानसन्तापितान्तरङ्गो बभूव तादृशः । हरिः कृष्णः । अतनुभिः अनल्पैः शराणां दर्भाणामग्रैः विद्धं दलितं वपुः गात्रं यस्य तादृशेनापि । छिन्नाग्रशरकाण्ड-विक्षतगात्रेणेत्यर्थः । तेन एतावन्तं अनेहसं दर्भाङ्कुरानुत्पत्तिर्व्यज्यते । अन्यत्र अतनोः मदनस्य शराग्रैः बाणाग्रैः बाणश्रेष्ठैर्वा विद्धवपुषा विक्षतशरीरेणापि । एतावत् समयं विरहविह्वलेनापीत्यर्थः । हरिणाग्रसरेण सारङ्गसत्तमेन । अन्यत्र अग्रसरेण सर्वोत्तमेन हरिणा कृष्णेन । अद्य सांप्रतं शरसञ्चयसंजननानन्तरम् । अन्यत्र रुक्मिणीप्रापकसामग्रीसंपत्तौ सत्याम् । विशिष्टाः भूयांसः स्वाद्या वा दर्भाः शराः यस्यां सा विदर्भा तादृशीं भुवं प्रदेशम् । अन्यत्र विदर्भदेशं विदर्भात् विदर्भदेशाधिपतेः भीष्मकात् भवतीति तादृशीं रुक्मिणीं वा । एत्य प्राप्य । चिरं बहुकालम् । सुखं सौख्यं आनन्दम् । अनुभूयते सांप्रतमनुभुज्यते इत्यर्थः । हरि-पक्षे "वर्तमानसामीप्ये वर्तमानवद्वा" इति सन्निहितत्वेन लट्प्रयोगः । इति एवं-रूपाणि । केलिवनपालिनीनां उद्यानपालिकानां वधूनां योषितां वचनानि हरिणोद्दे-शेन परस्परोदीरितानि । शब्दश्लेषया रुक्मिणीविरहार्तस्य स्वस्योदर्कश्रेयःप्राप्तावुप-श्रुतिविधया सूचकानीत्यर्थः । निशम्य श्रुत्वा । अचिरेण अनुपदमेव । अमन्दं अतिशयितम् । अन्तःप्रमदं हृदयानन्दम् । अभजत् प्रपेदे । शुभोदर्करूपोपश्रुति-महिम्ना हस्तप्राप्तामेव रुक्मिणीं मत्वा मुमुद इति भावः । अत्रोद्यानपालिकानां

प्रस्तुतहरिणपरैरेव विशेषणविशेष्यवाचकैरप्रस्तुतकृष्णवृत्तस्यापि प्रतीत्या प्रकृताप्रकृतश्लेषालङ्कारः। अत्र बहुषु पुस्तकेषु अग्रसरेण न किमिति पाठो दृश्यते। तदा न किं सुखमनुभूयते अनुभूयत एव। अतो बलवद्दुःखितस्यापि क्वचित् कालविशेषे सुखमप्यनुभूयेतैवेत्यर्थे मृग एव दृष्टान्तीकृतः। कामिनीवचनेनेति तदेव हरेरुपश्रुतिरूपतया रुक्मिणीप्राप्त्या वर्तमानविरहार्तेरनुपदनिवृत्तिद्योतकमिति मन्तव्यम्। अनेनैव कविना काव्यदर्पणे अमुमेव पद्यं श्लेषालङ्कारे उदाहृतवता चिरमिति पठित्वा तथैव विवृतत्वात् तादृश एव पाठः प्रथमलिखित इति मन्तव्यम। नत्कूटकं नाम वृत्तम्। "हयदशभिर्नजौ भजजलागिति नत्कूटकम्" इति लक्षणात्॥ ७३॥

इति श्रीविश्वामित्रकुलकलशपारावारराकासुधाकरश्रीबालचन्द्रार्यतातचरणकरुणापरीणाहसमासादितविविधविद्याविलासेन यज्ञवेदेश्वरेण विरचितायां रुक्मिणीकल्याणाख्यसरसमहाकाव्यव्याख्यायां मौक्तिकमालिकाख्यायां द्वितीयस्सर्गस्संपूर्णः॥

# श्लोकानुक्रमणिका